द्यानिवृत्तिः, ततश्च आत्यन्तिकः संसाराभावः। वक्ष्यति च— 'विद्वान्न बिभेति कुतश्चन' इति। संसारनिवृत्तावसत्याम् 'अभयं प्रतिष्ठां विन्दते' इत्यनुपपन्नम्, 'कृताकृते पुण्यपापे न तपतः' इति च। अतोऽवगम्यते अस्माद्विज्ञानात्सर्वात्मब्रह्मविषयादात्यन्तिकः संसाराभाव इति। स्वयमेवाह प्रयोजनम् 'ब्रह्मविदाप्नोति परम्' इत्यादावेव संबन्धप्रयोजनज्ञापनार्थम्। निर्ज्ञातयोर्हि संबन्धप्रयोजनयोः विद्याश्रवणग्रहणधारणा-

---

द्विद्योदये सति चैतन्यमात्रमवशिष्यते, नाविद्या नापि तत्कार्यमिति संक्षेपः। नन्वविद्यानिवृत्तिर्न प्रयोजनम् असत्त्वापत्तिरूपायास्तस्याः सुखदुःखाभावेतरत्वादित्यत आह— **ततश्चेति**। अविद्यानिवृत्तिवशादेव तत्कार्यसंसारस्य दुःखात्मकस्यात्यन्तिकी निवृत्तिर्भवति; तथा चाविद्यानिवृत्तिद्वारा संसारदुःखनिवृत्तिरूपा मुक्तिर्विद्यायाः प्रयोजनमित्यर्थः। तत्र मानमाह— **वक्ष्यति चेति**। भयोपलक्षितं संसारदुःखं न प्राप्नोति विद्वानित्यर्थः। अत्रैव पुनर्वचनद्वयमाह— **संसारेति**। विद्ययात्यन्तिकसंसारनिवृत्तौ सत्यामेवाभयप्रतिष्ठावचनं पुण्यपापयोरकरणकरणानुसंधानप्रयुक्तसंतापाभाववचनं चोपपन्नमित्यर्थः। साधितं ब्रह्मविद्याप्रयोजनं सप्रमाणमुपसंहरति— **अतोऽवगम्यत इति**। उदाहृतवचनजातादित्यतःशब्दार्थः। **अस्माद्विज्ञानादिति**। विधूतसर्वोपाधीत्यत्र प्रकृतादित्यर्थः। एवमानन्दवल्ल्यास्तात्पर्यमुपवर्ण्याद्यवाक्यस्य तात्पर्यमाह— **स्वयमेवेति**। स्वयमेव श्रुतिः 'ब्रह्मविदाप्नोति परम्' इति वाक्येन ब्रह्मविद्यायाः प्रयोजनं संबन्धं च किमर्थमाहेत्याशङ्क्याह— **आदावेवेति**। तत्र 'आप्नोति परम्' इत्यनेन प्रयोजननिर्देशः, 'ब्रह्मवित्' इत्यनेन ब्रह्मविद्याया निर्देशः, ताभ्यामेव समभिव्याहृताभ्यां विद्याप्रयोजनयोः प्रयोजनप्रयोजनिभावलक्षणसंबन्धनिर्देश इति विभागः। नन्वादावेव तयोर्ज्ञापनं किमर्थम्? तत्राह— **निर्ज्ञातयोर्हीति**। मुमुक्षोरुपनिषत्सु स्वप्रयोजनमुक्तिसाधनविद्यासाधनत्वज्ञानं विना उपनिषच्छ्रवणादौ प्रवृत्त्ययोगात्तदर्थमादावेव प्रयोजनादिकं वक्तव्यमित्यर्थः। तत्र वृद्धसंमतिसूचनार्थो हि-शब्दः। तदुक्तं वृद्धैः— 'सिद्धार्थं सिद्धसंबन्धं श्रोतुं श्रोता प्रवर्तते। शास्त्रादौ तेन